।। शिवाभ्यां नमः ।।

# ।। आर्तिहर स्तोत्रम् ।।

श्रीशम्भो मयि करुणा शिशिरां दृष्टिं दिशन् सुधावृष्टिम्।
सन्तापमपाकुरु मे मन्ता परमेशो तव दयायाः स्याम्।। १

अवसीदामि यदार्तिभिरनुगुणमिदमोकसोऽम्हसां खलु मे।
तवसन्नवसीदामि यदन्तकशासन न तत्तवानुगुणम्।। २

देव स्मरन्ति तव ये तेषां स्मरतोऽपि नार्तिरिति कीर्तिम्।
कलयसिशिवपाहीति क्रन्दन् सीदाम्यहं किमुचितमिदम्।। ३

आदिश्याघकृतौ मामन्तर्यामिन्नसावघात्मेति।
आर्तिषु मज्ञयसे मां किं ब्रूयां तव कृपैक पात्रमहम्।। ४

मन्दाग्रणीरहं तव मयि करुणां घटयितुं विभो नालम्।
आक्रष्टुं तान्तु बलादलमिह मद्दैन्यमिति समाश्वसिमि।। ५

त्वं सर्वज्ञोऽहं पुनरज्ञोऽनीशोऽहं ईश्वरस्त्वमसि।
त्वं मयि दोषान् गणयसि किं कथये तुदति किं दया नत्वाम्।। ६

आश्रितमार्ततरं मामुपेक्षसे किमिति शिव न किं दयसे।
श्रितगोप्तादीनार्ति हृदिति खलु शंसन्ति जगति सन्तस्त्वाम्।। ७

प्रहराहरेतिवादी फणितमदाख्य इति पालितो भवता।
शिवपाहीति वदोऽहं श्रितो न किं त्वां कथं न पाल्यस्ते।। ८

शरणं व्रज शिवमार्तीस्स तव हरेदिति सतां गिराहं त्वाम्।
शरणं गतोऽस्मि पालय खलमपि तेष्वीश पक्षपातान् माम्।। ९

।। इति श्री श्रीधरवेङ्कटेशार्य कृतिषु आर्तिहरस्तोत्रं समाप्तम् ।।